# अश्वत्थस्तोत्रम्

श्रीनारद उवाच -
अनायासेन लोकोऽयम् सर्वान् कामानवाप्नुयात् ।
सर्वदेवात्मकं चैकं तन्मे ब्रूहि पितामह ॥ १॥

ब्रह्मोवाच -
श्रुणु देव मुनेऽश्वत्थं शुद्धं सर्वात्मकं तरुम् ।
यत्प्रदक्षिणतो लोकः सर्वान् कामान् समश्नुते ॥ २॥

अश्वत्थाद्दक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः ।
ब्रह्मा चोत्तरदेशस्थः पूर्वेत्विन्द्रादिदेवताः ॥ ३॥

स्कन्धोपस्कन्धपत्रेषु गोविप्रमुनयस्तथा ।
मूलं वेदाः पयो यज्ञाः संस्थिता मुनिपुङ्गव ॥ ४॥

पूर्वादिदिक्षु संयाता नदीनदसरोऽब्धयः ।
तस्मात् सर्वप्रयत्नेन ह्यश्वत्थं संश्रयेद्बुधः ॥ ५॥

त्वं क्षीर्यफलकश्चैव शीतलस्य वनस्पते ।
त्वामाराध्य नरो विन्द्यादैहिकामुष्मिकं फलम् ॥ ६॥

चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे ।
बोधिसत्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ७॥

अश्वत्थ यस्मात् त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले ।
अथः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥ ८॥

क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते ।
सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम् ॥ ९॥

एकादशात्मरुद्रोऽसि वसुनाथशिरोमणिः ।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥ १०॥

अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोऽस्तु ते ॥ ११॥

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।

ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १२॥

सततं वरुणो रक्षेत् त्वामाराद्वृष्टिराश्रयेत् ।
परितस्त्वां निषेवन्तां तृणानि सुखमस्तु ते ॥ १३॥

अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनम् ।
शत्रूणां च समुत्थानं ह्यश्वत्थ शमय प्रभो ॥ १४॥

अश्वत्थाय वरेण्याय सर्वैश्वर्य प्रदायिने ।
नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥ १५॥

मूलतो ब्रह्मरूपाय मध्यतो विष्णु रूपिणे ।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः ॥ १६॥

यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते ।
यदाश्रयाच्चिरञ्जीवी तमश्वत्थं नमाम्यहम् ॥ १७॥

अश्वत्थ सुमहाभाग सुभग प्रियदर्शन ।
इष्टकामांश्च मे देहि शत्रुभ्यस्तु पराभवम् ॥ १८॥

आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसम्पदम् ।
देहि देव महावृक्ष त्वामहं शरणं गतः ॥ १९॥

ऋग्यजुःसाममन्त्रात्मा सर्वरूपी परात्परः ।
अश्वत्थो वेदमूलोऽसावृषिभिः प्रोच्यते सदा ॥ २०॥

ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः ।
आवृत्य लक्षसङ्ख्यं तत् स्तोत्रमेतत् सुखी भवेत् ॥ २१॥

ब्रह्मचारी हविष्याशी त्वदःशायी जितेन्द्रियः ।
पपोपहतचित्तोऽपि व्रतमेतत् समाचरेत् ॥ २२॥

एकाहस्तं द्विहस्तं वा कुर्याद्गोमयलेपनम् ।
अर्चेत् पुरुषसूक्तेन प्रणवेन विशेषतः ॥ २३॥

मौनी प्रदक्षिणं कुर्यात् प्रागुक्तफलभाग्भवेत् ।
विष्णोर्नामसहस्रेण ह्यच्युतस्यापि कीर्तनात् ॥ २४॥

पदे पदान्तरं गत्वा करचेष्टाविवर्जितः ।
वाचा स्तोत्रं मनो ध्याने चतुरङ्गं प्रदक्षिणम् ॥ २५॥

अश्वत्थः स्थापितो येन तत्कुलं स्थापितं ततः ।
धनायुषां समृद्धिस्तु नरकात् तारयेत् पितृन् ॥ २६॥

अश्वत्थमूलमाश्रित्य शाकान्नोदकदानतः ।
एकस्मिन् भोजिते विप्रे कोटिब्राह्मणभोजनम् ॥ २७॥

अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात् ।
अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा ॥ २८॥

एवमाश्वासितोऽश्वत्थः सदाश्वासाय कल्पते ।
यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात् ॥ २९॥

छिन्नो येन वृथाऽश्वत्थश्छेदिता पितृदेवताः ।
अश्वत्थः पूजितो यत्र पूजिताः सर्वदेवताः ॥ ३०॥

॥ इति अश्वत्थ स्तोत्रं सम्पूर्णम् ॥